§ **२९.** इतो हस्तिनमधिरुह्य **अम्बडः** स्वगृहं गतवान् । [वाग्]भटदेवा(वो) नमस्कृतः ।............ ............... देवं नमस्कुरु । तथा कृते, कथितम्–'इयन्ति दिनानि राजपुत्रस्त्वमभूः, अधुना व्यापारी जातः । श्री**हेमसूरीन्** कुलगुरून् नमस्करउं (स्करोतु) । पौषधागारे गतः । गुरवो नमस्कृताः । तैस्तु धर्मलाभो न दत्तः । आशीर्वादोऽस्तु । गृहे गत्वा उक्तम्–'अहं पौषधागारे प्रहितः, धर्मलाभस्यापि संदेहः' । **वाग्भट-देवेन** गुरव उक्ताः । तैरुक्तम्–'**भृगुकच्छे** गतः कथं प्रासादमुद्धरिस्य(ष्य)ति श्रीमुनिसुव्रतस्य ?, अनेकानन्या-यान् विधास्यति' । मन्त्रिणा [तस्य] अग्रे उक्तम्–'मम गुरव उद्धृते प्रासादे हृष्टाः' । 'द्विवेलं उद्धृते भोक्ष्ये, परं मम भूर्जे विना न वक्तव्यम्' । चलित्वा **भृगुपुरे** गतः । प्रवेशे जाते मुंच(मञ्च)मुपविष्टः ।

§ **३०.** इतो देवीपूज(जि)का योगिनीभिरन्विता समेता । अनभ्युत्थिता समीपे [समे]त्य विवेश । **अम्बडेन** कूर्पराहता मञ्चकाद् बहिः पपात । मृतमृता । कर्मस्थायः प्रारब्धः वर्षेसणं (ण सं) पूर्णः । शिलाकोटिघटितः प्रासादो जातः । राणको**दयनस्य** मनोरथश्च [सिद्धः] । **अम्बडे**[न] श्रीपत्तने एका विज्ञप्तिः श्री**कुमारदेवस्य,** एका गुरूणाम्, एका **वाग्भटदेवस्य,** एका श्रीसंघस्य–एवं ४ प्रहिताः । **वाग्भटेन** श्रीगुरूणां पुरतो विज्ञप्ति[ः] मुक्ता । 'इदं किम् ?' । '**अम्बडस्य** विज्ञप्तिः' । 'वर्षं गतस्याऽऽसीत्, अद्य का विज्ञप्तिः ?' । 'विलो-कयत' । प्रतिष्ठो(ष्ठो)परि आकारणं दृष्टम् । 'मन्त्रिन् ! एतत् सत्यम् ?' । 'विज्ञप्तिः कथयति' । 'तर्हि चल्यताम्' । नृपो गुरुभिः सह प्राचालीत् ।

इतोऽर्द्धमार्गे जनः संमुख्य(ख)मायये–यद**म्बडो** न शक्नोति । गुरवः संघं विमुच्य **भृगुपुरे** गताः । प्रक्षीणधातु**रम्बडो** दृष्टः । देवीप्रासादे गत्वा ध्याने निविष्टाः । इतो मुख्यपूजिकोदरे उदरवाढिर्जाता । सा कोकूयते । परिचार्यः समागत्य प्रमुमु(मू)चुः–'अस्माकं स्वामिनी मुच्यन्ते(ताम्) । 'तथाऽम्बडोऽपि विमुच्य-ताम्' । 'स सकलो जा(ज)ग्धः, पीतश्च' । 'तर्ह्येषाऽपि मृ(म्रि)यताम्, जीवन्ती किं करोति ? एक एव सार्थोऽस्तु' । साऽत्यर्थं पीडिता प्रभूनेत्यावदत्–'प्र(प्रा)सादं विधाय मां मुञ्चत' । 'अम्बडं मुञ्च' । 'तरू(रुत?)वेष्टितं कृत्वा घृतकुम्भ्यां प्रक्षिपत । यदेति वक्ति–ममाऽप(र?)तिर्मां कर्षत । ततः कृष्ट्वा स्नानं कार्यम् । यदा [स] जल्पिष्यते तदा त्वमपि सज्जा भविष्यसि' । दिनत्रयान्तेऽम्बडः सज्जो जातः । साऽपि च ।

इतः श्रीसंघान्वितो नृपः पादमवधारितः । गुरुभिः साक**मम्बडः** संमुखो(खं) ययौ । **अम्बडेन** दत्तकरा गुरवः प्रदक्षिणां यच्छन्ति । प्रासादं तुङ्गमालोक्य गुरुभिरुक्तम्–'मया दे[व]-गुरुं विना कोऽपि न स्तुतः; परं तव कीर्त्तनेन किञ्चित् वक्षा(क्ष्या)मः' । 'आदिशत'–

**किं कृतेन न यत्र त्वं [यत्र]त्वं किमसौ कलिः ।**
**कलौ चेत् भवतो जन्मि(न्म) कलिरस्तु कृतेन किम् ॥ ३३ ॥**

प्रतिष्ठा जाता । आरात्रिकोत्तारणाय नृपो विज्ञप्तः । 'त्वमेवोत्तारय' । **वाग्भटेना**प्यनुमतः । कर्त्तुमुद्यतः । नृपेण शृङ्खलं स्वकण्ठादुत्तार्या**म्बड**गले क्षिप्तम् । तेन याचकानां पठतां गृहसारं दत्तम् । द्वारभट्टस्य तस्मिन् शृङ्खले दत्ते नृपेणोक्तम्–'उत्तारय' । तथाकृते **अम्बडेन** पृष्टम्–'देव ! किमुत्सुका जाताः ?' । 'मया ज्ञातम्, भवान् जीवमपि दास्यसि; मम त्वया बहुकार्यमस्ति' । संघार्चादिषु जातेषु पुनः संघः **पत्तनं** प्राप्तः । तत्र चैत्यबलानके तं ९ घडीसुवर्णस्य चतुरस्रं कलशं ददौ ।

*

§ **३१.** अथैकदा नृपः सेवाऽऽयातं **मल्लिकार्जुन**सुतं प्राह–'पापक्षयादिरत्नपञ्चकस्य उत्पत्तिं वद' । 'देव ! **मल्लिकार्जुना**देकविंशतितमः पूर्वजो **धवलार्जुनः** । तस्य पञ्चदश प्रिया आसन् । एका नरेन्द्रसुता खड्गेन

परिणीता । [तां] आनीय बन्दी(न्दि)वत् मुक्ता । नृपस्तां वेत्तीव न । शेषा मान्यतमाः । सा तु दैवमेव उपालभते स्म । अन्यदा पुरे काचित् परिव्राजिकाऽऽगता । सा चेटीभि(भी) राज्ञीसकाशमानीता । तयोक्तम्–'किं वेत्सि ?' । साऽऽह–

**दंसेमि तं पि सुणं(ससिणं) वसुहावइन्नं, थंभेमि तस्स वि रविस्स रहं नहद्धे ।**
**आणेमि सवसुरसिद्धगणं गणाओ, तं नत्थि भूमिवलए मह जं न सज्झं ॥ ३४ ॥**

प्रसीद, मम पतिं वसी(शी)कुरु' । तया करे सर्षपा वावि(जपि)त्वाऽर्पिताः । यथा तथा नृपस्य [भोजन]मध्ये देयाः । शाकं कृत्वा शिप्रं भृत्वा चेट्युक्ता–'भोजनावसरोऽस्ति देवस्य नीत्वा परिवेषय' । सा शृङ्गारं कर्त्तुं गता । देव्या चिन्तितम्–'न ज्ञायते कदाचिदेषा वैरिणा प्रहिता स्या[त्], तदा मे पतिमारिकायाः का गतिः स्याद्' इति मत्वा अधोगवाक्षस्य समुद्रस्तत्र शिप्रां ढाला(ल)यामास । चेटी उक्ता–'तिष्ठतु' । सा काकरोत्पपात(?) । इतस्तेन वशीकृतः समुद्रो नृपरूपं कृत्वा रात्रौ आयातः । स देव्या नृपवदुपचरितः, नित्यमेति । इतो देवी सगर्भाऽभूत् । चेटीं प्राहिणोत्–'देव ! सीमन्तोन्नयनाय मुहूर्त्तं अस्मत्स्वामिन्या गणापयत' । नृप आह–'का त्वम् ? का तव स्वामिनी ? अहं नामापि तस्या न जाने । कस्य सुता ?, कदा परिणीता ? । तया [यदकृ]त्यं कृतम् । मम किमुच्यते ?' । साऽऽगत्य देवीं प्राह । तयोक्तम्–'समये ज्ञास्यते' । इतः पुत्रो जातः । सूतकशुद्धेरनन्तरं बालमादाय प्रतोलीमेत्योपविष्टा–'मम शुद्धिं यच्छत । जातायां बालः स्तनं ग्रहीष्यति' । नृपेणोक्तम्–'मम साराऽपि न अधुना । खड्गेन परिणीता श्रुता, परं दृष्टाऽपि न । पुत्रस्य का वार्त्ता ?' । प्रधानानप्रैषीत्–'एतत् मम न दूषणम्, तव, मया न सोढ[व्य]म्' । सा न मन्यते । पट्टराज्ञी प्रहिता । श्री श्रीभणितेन परिच्छिद्यते । सा एत्यावादीत्–'किमिदमारब्धम् ?' । तयोक्तम्–'तव कुले इदं घटते, मम तु न' । नृप[:] स्वयमेत्य प्राह–'तव ममाधुना दर्शनं न, पुत्रस्य का कथा ?; उत्थीयताम्' । 'देव ! सर्वथा न, भा(वा)र्त्तापि दिव्यं विना वाच्या । प्रधानैर्दिव्यं दत्तम् । राज्ञी सुतमादाय बहिर्ययौ, पौरसहितो नृपश्च । तत्र लोहमयी नौः, तस्यां समधिरोप्य दिव्यकर्त्ता क्षिप्यते । शुद्धे तरति, अशुद्धे ब्रुडति । सा राज्ञी इतिकामा श्रावणिकामकार्षीत् ।

**आदित्य-चन्द्रावने(न्द्रावनिलो ?) यमश्च, द्यौर्भूमिरापो हृदयं मनश्च ।**
**अहश्च रात्रिश्च उभये(भे च) सन्ध्ये, धर्मो हि जानाति नरस्य वृत्तम् ॥ ३५ ॥**

इत्युक्त्वा नावमधिरुरोह । सपुत्रापि ब्रुडिता । लोकः कलकलं यावत् करोति, तावन्नावमधिरूढा देवी सशृङ्गारा, [शृङ्गार] कोटिसाटीपरिदधाना, सहस्रकिरणताडंकाभ्यामलङ्कृतकपोला, पापक्षयेन हारेण विराजमानवक्षःस्थला, माणिक्यपटेनाच्छादितबाला, संयोगसिद्धिशिप्राकरा सर्वैरपि दृ(द)ष्टा । शुद्धताऽऽललाप । नृपेण मध्ये प्रवेशिता । नृपो रात्रौ तद्वेश्मनि इयाय । तयोपचरितः पृष्टवान्–'अहं सर्वथा न जाने, वं(त्वं) तु सत्येव, या समुद्रेण शोधिता' । इतः समुद्रदेवेन प्रत्यक्षीभूय आदितोऽपि स्वरूपमुक्तम्–'नास्या अपराधः' । नृपेण सुतस्य **बालधवल** इति नाम दत्तम् । सा राज्ञी पट्टराज्ञी कृता । एतानि [रत्नानि तयैव समर्पितानीति] ।

*

## कुमारपालनिवारित-मृतधनाहरणवर्णनम् ।

§ ३२. अथैकदा नृपो **भृगुपो भृगुकच्छं** गतः । तत्र कश्चित् श्रेष्ठी अपुत्रः प्रवहणमधिरुह्य परद्वीपे गतः । इतो वार्त्ता विनष्टस्य जाता । राजा(ज)पुरुषैर्गृहं रुद्धम् । तत्पत्नी सपरिवारा विलपितुं प्रवृत्ता । नृपः कोलाहलमाकर्ण्य वण्ठं प्रे(क्ष्य)ष्य वृत्तं ज्ञात्वा प्रातः स्व[यं त]स्य गृहे गतः । तत्पत्नीमाहूयाऽऽह–'तव प्रियो यद्येति तदा भव्यम् । नैति तदा गृहसारं भुङ्क्ष्व'–इत्युक्त्वा तां संबोध्य श्रीपत्तने गतः । पौषधागारमागत्य प्रभुं पप्रच्छ–'प्रभो ! पुत्राः कियन्तः ?' । तैरुक्तम्–'११' ।

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च।
दत्तः क्रीतः कृत्रिमश्च तथाऽन्यौ कुण्ड-गोलकौ ॥ ३६ ॥
कानीनो नवमः पुत्रो दशमो भ्रातृजस्तथा।
एकादशो भवेत् पुत्रो धनग्राही महीपतिः ॥ ३७ ॥

यस्तस्य पट्टकं गृह्णा(ह्ला)ति लक्षपञ्चकं यावत् तस्य; ऊर्द्ध्वं नृपस्य'। 'भगवन्! मया कियता पुत्रेण भाव्यम्? अतो मृतद्रव्यस्य नियमोऽस्तु'। तदा प्रभुणोक्तम्—

अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः।
त्वं तु सन्तोषतो मुञ्चन् सत्यं राजपितामहः ॥ ३८ ॥

ततः 'मृतस्वमोक्ते'ति नाम पप्रथे।

सिरिभरहनिवाओ जं [न] केणावि मुक्कं रुअइमयधणं जो जं च पावाण मूलं।
निअजणवयसीमं वारए जो अ जूअप्पमुहवसणचक्कं सो वरो मज्झ होउ ॥ ३९ ॥

इति धर्मनरेन्द्रसुताया [अ]हिंसाया वाक्यम्। इति हिंसायाः—

श्रीमचन्तकतात! तात तनये हिंसे विहस्ताऽस्ति किं
किं त्वं वेत्सि सुखान् स्वकीयदुहितुर्वैधव्यदुःखं न हि।
मय्युत्तीर्णमनाः कुमारनृपतिस्तां जीवरक्षां व्यधात्
संसक्तः करुणास्त्रियां स्वविषयान्निर्वासयामास माम् ॥ ४० ॥
पूर्वं वीरजिनेश्वरे भगवति प्रख्याति धर्मं स्वयं
प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्त्तुं क्षमः श्रेणिकः।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधात्
यस्या सा[स्य] वचः सुधांशुपरमः श्रीहेमचन्द्रो गुरुः ॥ ४१ ॥
..............................................
कस्याऽसौ विदितो न गूर्जरपतिः श्रीसिद्धराजादनु ॥ ४२ ॥

—इति कविभिः स्तूयमानो राज्यं करोति स्म।

इतः केनाप्युक्तम्—'देव! स भृगुकच्छे श्रेष्ठी समायातः। नृपेणाहूय व्यतिकरं पृष्टः। स आह—'देव! वाहनाने(न्ये)कपर्वतान्तराले पतितानि। तत्र वायुप्रचारो न। व्याकुलीभूतो जनः। निर्यामिकेणा(न) उक्तम्—'योऽत्र पर्वतेऽधिरुह्य भारण्डपादे स्वं बद्धा रात्रौ तिष्ठति, प्रातस्ते उड्डीय पञ्चशैले द्वीपे यान्ति। तत्र गतो भारण्डानुड्डापयति। तेषां पक्षि(क्ष)वातेन वाहनानि चलन्ति। मार्गं लभन्ते'। ततः श्रेष्ठी वणिक्पुत्रान् मुत्कलाप्य जनानामुपकाराय पञ्चशैले गतः। तत्र पक्षि[ण उ]ड्डापितानि(पिताः)। ततः श्रेष्ठी पञ्चशैलाधिपतिना(ना) उत्पन्नकरुणातिरेकेण वाहनिकानां तटस्थानां मेलितः। नृपेण श्रुत्वा सत्कृत्य प्रहितः ॥ छ ॥

*

## कुमारपालकृतायास्तीर्थयात्राया वर्णनम्।

§ ३३. अथैकदा [नृ]पेण गुरवोऽभिहिताः। ......यात्रायै मुहूर्त्तमवलोकितम्। महदुत्सवेन प्रस्थान(नं) कृतम्। सर्वत्र कुङ्कमपु(प)त्र्यः प्रहिताः।

**वाहनौषधि-पाथेयसहाय(यं) वृषभादिकम् ।**
**यत् यस्य नास्ति तत् तस्मै नृपः सर्वं प्रदास्यति ॥ ४३ ॥**

इतश्चारैरागत्योक्तम्–'देव ! **डाहलदेशीयः कर्णो** लक्षैस्त्रि(स्त्रि)भि[रश्वानां] गजानां चतुर्दशभिः शतैः, विंशतिलक्षपत्य(त्य)न्वितो **गूर्जरात्रौ** उपर्येति' । तत् श्रुत्वा नृपो व्याकुलः सन् प्रभूनाह–'भगवन् ! अन्तरायमिव
५ बुध्यते । यात्रा क्रियते वा परचक्रसंमुखं गम्यते । द्वयं कथं स्यात् ?' । 'देव ! स्वस्थैर्भाव्यम् ।

**श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।**
**अश्रेयसि स(प्र)वृत्तानां क्वापि यान्ति विनायकाः ॥ ४४ ॥**

परमेश्वरप्रसादात् सर्वं [भव्यं] भविष्यति । विषादो न विधेयः' । इतस्त्रयर्त्रिशतित(°त्र्यस्त्रिंशत्त°)मे दिने निवृत्तिरेष्यति । .........उच्यते २५ मे दिने नृपो राजपाट्यो(ट्यै) चचाल । अश्वेनापहृतो व्रजन् वटस्य
१० तरोरधो गतः । वेगवशात् शृङ्खलं शाखायां उत्सल्य लग्नम् । गले पासकः समायातः, तुरगो गतः । नृपान्वेषका [अ]श्वमादाय गताः । नृपे मृते शाखया भग्नया नृपो भूमौ पपात । इतः श्री**कुमारपालदेव**चर आखेटिकरूपेण नृपं पतितं **गरुडो** हारकुण्डलकान्त्या व्याप्तं दृष्ट्वा भीत इव समीपमायातः । सकुण्डलं नृपसि(स्य) शिरश्छित्वा आभरणान्यादाय, स्थाने स्थाने मुक्तैरश्वैः, निर्णीते दिने नृपमेत्य वर्द्धापयामास । नृपेण पारितोषिकं दत्तम् । नृपशिरसः संस्कारं कृत्वा महदुत्सवेन यात्रां चक्रे ।

१५ § ३४. तथा एकदा **आनाकः सपादलक्षा**धिपतिः **शाकंभरपुनि**(शाकंभरिपुर्नि)वासी श्री**कुमारपालदेव**भगिनीपतिः । पत्न्या सह क्रीडन् सारैस्तासां मारिमुच्चरति । इतः श्री**प्रेमलदेव्या पत्तने** नृपाय ज्ञापितम्–यदसौ सारीणां मारिं कथयति इति च वदति–'तव बन्धोरेषाऽनिष्टा, मम तु इष्टैव । वरं मे वैधव्यमप्यस्तु, परं [इदं व]चः सोढुं नोत्सहे' । राजा कटकमादाय चलितः । कथापितम्–'यदस्य जिह्वां पाश्चात्ये कर्षयामि' । इतः श्री**आनाको**ऽपि **गुड्हापुरे सपादलक्ष**सीमायां संमुखः समायातः । तत्र युद्धे जायमाने श्री**कुमारपालः**
२० स्वगजात् **कलहपञ्चाननना**दुत्प्लुत्य **आना[क]**गजे गत्वा तं जयाभिः (ज्याभिः ?) कृष्ट्वा बबन्ध । पश्चात् सहाऽऽयाताः श्री**देवसूरयः, हेमाचार्या**श्च विज्ञप्ताः–'मम प्रतिज्ञा जिह्वाकर्षणलक्षणा, अतः किं क्रियते ?' गुरुभिरुक्तम्–'देव ! एतन्न युज्यते । तथा कुरु, यथा टोपीं कारयित्वा तत्र पाश्चात्ये जिह्वां विधाय, कृष्टेत्युक्त्वा मुच्यताम्' । तथा कृत्वा 'पुनर्न वाच्यम्'–इत्युक्त्वा पुन(ना) राज्ये संस्थाप्य मुक्तः । तदा श्री**कुमारपालेन** तत्र देशे पाषाणमयान् घाणकान् दृष्ट्वा सर्वानभञ्जयत् । पश्चान्निवृत्त्य स्वपुरं गतः । **विश्वमल्लः शाकं(कं)-**
२५ **भरी**राज्यं करोति ।

§ ३५. अत्र **सिद्धराज्ञि** दिवंगते **गूर्जरात्रा**शालापतयः **अजयमेरु**दुर्गप्रत्यासन्ने **बछिरापुरे** गताः । श्री**विश्वमल्लेन गूर्जरा[त्रा]यां** यान्ति पट्टकूलानि निषिद्धानि । गृह्णा(ह्णा)ति (?) स महादण्डेन दण्ड्यते ।

एकदा कोऽपि स्कन्धवाहिकः **बछेरे** गतः । एकं श्वेतपट्टकूलं क्रीतं नलीप्रयोगेन **पत्तने** राजसदसि नृपोपायने कृतम् । स्वरूपे ज्ञा[ते] भाण्डागारिकस्यार्पितम् । यदेतत् वसनार्थं स्थाप्यम् । अस्माकं तनयस्य
३० **चाहडस्य** न दर्शनीयम् । इतः प्रातर्नृपति(ती) राजपाट्यां निःसृतः । **चाहडं** प्रतीक्षन्नस्ति । **चाहडेन** भाण्डा० सकाशात् पटो याचितः । तेनोक्तम्–'नृपादेशो नास्ति' । 'मम को नृपादेशः ?, समर्प्यय' । गृहीत्वा प्रावृत्यागच्छन् नृपेन(ण) दृष्टः । सामन्तैरुक्तम्–'वणिक(ग्) नृपेन(ण) नादेरोपितो (?) नृपाऽऽज्ञामपि न मन्यते' । इतो न्यग्मुखं नृपं दृष्ट्वा कुमारेणोक्तम्–'देव ! मया तत् कृतं नास्ति येन तातः कृष्णवदनः स्यात् । परं क्षीरोदकानामेषामप्रासिहेतुः बीटकप्रसादं कुरु, यथा तेषां सुभिक्षं करोमि । नृपो न यच्छति । 'भोक्ष्ये मार्गे भूय'

ततो नृपेन(ण) घोटकसहस्र २४, गज २४, लक्षपत्य(त्त्य)न्वितः प्रहितः । **वीसलदेव**नृपस्तु संमुखमाययौ । सीमायां **चाहडेन** भग्नः सन्, नंष्ट्वा गतः । इतश्च**आहडेन** मंत्र (तत्र) पञ्चविंशति पुराणि भग्नानि । बं[बे]रे ताम्रमयं दुर्गमादाय शालापतीनां शतसप्तकं ७ गृहीतम् । इतः भट्टेनोक्तम्–

**जंगलउरु जडहारु जगिउ जज्ञपुरं नराणउं,**
**नयणवाहुं नग्गउरु नयरु नरवरु जिट्ठाणउं ।**
**सप्तपाडं सरवाडं भग्ग सइंभरं वग्घेरउं लाडणउं,**
**गो(पो?)कर्छु लोहुं वँड जिझरि बंबेरउं पींपलउरु ॥**
**पुक्करु मंडलकरु मेडतउं उज्झरि ............... ।**
**वीसलह नारि विलवई अबल लंकदाहु चाहड म करि ॥ ४५ ॥**

एवं जयपताकामादाय निवृत्तः । **पत्तने** गतः । नृपः संमुखं समाययौ । तावद् दुकूलानि बहूकृतानि सन्ति । नृपेन(ण) 'राजघरट्ट' इति बिर(रु)दं दत्तम् ॥

§ ३६. अथैकदा पाउन्तारसुत**आहडो** राज्यं त्याजितः सन्, **कुमारदेव**द्विष्टः सन् श्री**वीसलदेवाय सपाद[ल]क्षा**धिपतये मिलित्वा **पालीपुरे** सकटकः स्थितः । इतः प्रधाना[ना]मग्रे रावा समायाः (ख्याता) । तैरुक्तम्–'नृपः क्वास्ते ?' । 'पौषधागारे' । प्रधानैरेत्य पृष्टो द्वारपालकः–'नृपस्य कोऽवसरः ?' । 'सामायिकमस्ति' । एकेनाऽऽलोकितम्, गृहीतसामाइ(यि)कं पट्टकोपविष्टमवलोक्य एकेनोक्तम्–'भूडिता **गूर्जरात्रा**, यस्या [अ]यमधीशः । चिणहट्टिकवत्, पश्यताम्' । नृपेन(ण) श्रुतम् । पारिते [सामायिके] स्वरूपमुक्तम् । नृपेन(ण) दूतः प्रहितः–'एषा **पल्लिका**ऽस्माकम्, भवता कथमाक्रान्ता ?' । संमुखं प्रेषितम्–'**पल्ली** दूरेऽस्तु; **पत्तन**मप्यस्माकम्' । इतो नृपः सज्जीकृत्य चलितः । **पल्ली**परिसरे द्वयोर्मेलो जातः । इतश्च**आहडेन** द्विगुणान् ग्रासान् विधाय सैन्यं परावर्तितम् । ततः सन्नद्धे कटके कोऽप्युत्थापनिकां न करोति । इतो नृपेन(ण) **कलह[पं]चानन**गजाऽऽरूढेन आधोरण उक्तः–'रे ! त्वमपि परावर्तितः, यद् गजं न प्रेरयसि ?' । 'देव ! **विश्वमल्ल**गजारूढ**आहडो** हक्कां करोति । तस्याः श्रुत्वा गजो न क्रमते' । 'गजकर्णयोः पटीं विदार्य क्षिप' । तथाकृते नृपस्त्वाह–'किं जनेन मारितेन, आवयोरेव [र]णोऽस्तु' । तथोक्ते **चाहडः** खड्गखेटकमादाय स्वगजस्य दन्तयोरागत्य यावन्नृपगजे गमनाय चरणमुत्पाटयति तावदाधोरणेन गजः पश्चात् कृतः । **चाहडे**ऽन्तरा पतिते गजेन चरणोऽदायि । स खण्डीभूतः । श्री**कुमारपालदेव**स्तु गजं गत्वा **वीसलस्य** शिरश्चिच्छेदे । सकलमपि सैन्यं मिलितम् । उभयोरपि सैन्ययोः । इतश्चारणेनोक्तम्–

**इक्कह पाली माटि वीसलखउ झगडगउ करइ ।**
**कुमारपाल रणहाटि को जाणंतउ वुहुहरइ ॥ ४६ ॥**

इतः श्री**हेमाचार्यै**रुक्तम्–

**ग्रस्तामेकामपि जरयितुं पल्लिकां नैव शक्तः,**
**शाकंभर्याः पतिरतितरां कृत् प्रतापज्वरार्त्तः ।**
**आज्ञाकाङ्क्षाविषयविमुखश्चेदितोऽनेकधान्यै (?)–**
**र्जीवत्युर्व्यां यदि परमसौ लङ्घनाभ्यासवृत्त्या ॥ ४७ ॥**

तत्र गणिं प्राकारकरणाय प्रासादस्य च विमुच्य स्वयं पत्तने ययौ ॥ छ ॥

§ ३७. एकदा वर्षाभिग्रहेषु जनैर्गृह्यमाणेषु **अनादिराउलक्षिपुरुषमठपः** ग्रासद्रामलक्ष २७ एत्य प्रभुं विज्ञपयामास ।

**चतुर्मास्यामासीत्तव पदयुगं नाथ ! निकषा**
**कषायप्रध्वंसाद् विकृतिपरिहारव्रतमिदम् ।**
**पुनस्त्वय्यां श्रद्धानिजचरणनिर्लोठितकले**
**जलक्लिन्नैरन्नैर्मुनितिलक ! वृत्तिर्भवतु मे ॥ ४८ ॥**

५ §३८. एकदा आमिगपुरोहितः प्रभूणां चरणयोर्वन्दनं न यच्छति, मदात् । राज्ञा द्रम्मलक्षत्रयग्रासाद् बहिः कृत्वा पुरान्निष्काशि(सि)तः । वर्षत्रयं भ्रान्त्वा पुनरायातः । काव्यमेकं पत्रिकायां [आ]लिख्य पौषधागार-मायातः । नमस्कृत्य पत्रिका दर्शिता, वाचिता—

**ब्रह्मण्युत्पन्नबीजा कलितकिशलया प्राच्यवल्मीकपुत्रे**
**व्यासे बद्धालवाला स्फुटरुचिररुचिर्व्योनशे कालिदासे ।**
१० **प्रौढा श्रीमुञ्ज-भोजप्रमुखनृपगुणे पुष्पिता देवसूरौ**
**आचार्ये हेमसूरौ फलमिह जगृहे भारती[श्री]लतेव ॥ ४९ ॥**

वन्दनकम्, प्रसादे······युक्तम् । पुनः स्वपदे स्थापितः ॥ छ ॥

§३९. एकदा श्रीपत्तने कांथडियोगी समायातः । स त्वन्यदर्शनिकैरुक्तः—'**श्वेताम्बरैः** पुरं व्याप्तम् । नृपस्तद्वशगोऽस्ति । यदि त्वादृशः कल(ला)वान् काञ्चिदपूर्वां कलां दर्शयति तदा मार्गमभ्येति' । 'स्वशक्त्या १५ यतिष्ये' । प्रातः कदलीपत्रपडे वेसिरकडदण्ड्यां (?) पञ्चवर्षदेशीयाः स्कन्धवाहकाः, तत्राधिरुह्य द्विजैस्स्तूयमानो बभ्राम । इतो नृपेण श्री**हेमाचार्या** उक्ताः—'प्रभो ! कलावान् योगी, तस्य मिलनाय यद्यादेशो भवति तदा-यामि' । गुरुणोक्तम्—'विशेषतः, नृपेन(ण) सर्वदर्शनसमा[ने]न भाव्यम्' । नृपश्चलितः । इतो ब्राह्मणैर्योगी वर्धापितः । नृपः समभ्येति । तस्य तृतीयज्वरपाली तदाऽऽसीत् । तेन कन्थायां तृतीयं न्यस्य उत्तार्य मुक्ता । सा धडहडति । इतो ध्यानबलेनावनेश्चतुरङ्गुलं अलग्नो भूत्वा स्थितः । नृपेन(ण) दृष्टः । पृष्ठे आधारः । पश्चात् २० ध्याने पारिते नृपेन(ण) पृष्टम्—'भगवन् ! कन्थाधः कोऽपि क्षुल्लकोऽस्ति ?' । उत्पाट्य दर्शिता । मुक्ता तथैव । 'देव ! तवागमनं श्रुत्वा अत्र तृतीयज्वरो विश्राणितः । यथा वार्त्ताः कर्तुं शक्यन्ते' । नृपः प्राह—'तर्हि कथं नोच्छिद्यते ?' । योगिनोक्तम्—

**नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।**
**अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ५० ॥**

२५ श्री**हेमाचार्या** अपि इत्यादिशन्ति । नृपे उत्थिते जनैः पौषधागारे प्रभूणामुक्तम् । गुरुभिः शिष्याना-(णा)मादेशो दत्तः । यत् नृपे आगते उपवेशनात् कंबलिका अपाकर्त्तव्या । तथाकृते नृपः करप्रमाणं चतुर्दिक्षु निरालम्बान् दृष्ट्वा आह—'मम गुरुर्देवरूपी' इत्युक्त्वा नमस्कृत्याऽऽवासे न(ग)तः ॥ छ ॥

§४०. इतो **रामचन्द्रेण** जात्या चारणेन श्रीप्र०पार्श्वे व्रतमात्तम् । स सर्वविद्यो जातः । एकदा गुरुभिः सह चैत्यं व्रजन्, रत्नावलीं पथि पतितां दृष्ट्वा आह—

३० **जेसं भूतलयस्स वि कणेसु पडिएसु आसि अहिलासे ।**
**ते ······अस्स पसाया रयणे वि अणायरा जाया ॥ ५१ ॥**

शतप्रबन्धकर्त्ताऽऽसीत् ।

एकदा योगशास्त्रमधीयानो रामो "रोम्णां ग्रहणमाकारे" स्थाने "रोम्णो" इति पठन् शेषतपोधनै-रुक्तम्—'राम ! "रोम्णां" वद इत्थं', पुनस्तथैव वक्ति । गुरुभिरुक्तम्—'किमिति "जातावेकवचनम्" ?, भवत्वित्थम्' ।

§४१. अथ श्रीकुमारपालनृपतेः सुतो नृपसिंहदेवो नामा षोडशवर्षदेशीयः शरीरे म(मा)यावी जातः। वैद्याः परिकर्मणां चक्रुः, परं नालगत्। श्रीनृपो देवी च पार्श्वे उपविष्टौ स्थः। इतो गुरुभिरुक्तम्–'वत्स ! किं बाधते ?' 'प्रभो ! एकं बाधते। यद् मत्तातो राज्यं प्राप्य कृपणो जातः। प्रासादाः पाषाणमयाः कारिता[:]। अहं तु स्वर्णमयान् कारयिष्यामि। असौ मनोरथः सहैव नेयः'। इत्युक्ते प्रभोर्नेत्रेऽश्रुपातो जातः।–'देव ! कुमारो न जीवत्येव, यस्येत्थं मनोरथाः'। अथ कुमारसमाधिना दिवं ययौ ॥ छ ॥

श्रीहेमाचार्याणां शिष्यः **सागरचन्द्रो** रूपवान् विद्यावान्। स राज्ञा प्रभूणां पार्श्वात् राज्यार्थे याचितः। गुरुभिरुक्तम्–'देव ! इदं न युज्यते सर्वथा'। इतः **सागरचन्द्रेण** चतुर्विंशतिनमस्काराः क्रियागुप्तकाः कृताः। सन्ध्यायां प्रतिक्रमणक्षणे उक्ताः। नृपेनो(णो)क्तम्–'अहो कविता ! अहो रूपम् !'

नृपः प्रतिक्रम्य धवलगृहं गच्छन् **कपर्दिनं** प्राह–'भो भाण्डागारिक ! **"गीतं न गायतितरां युवतिर्निशासु"** इमां समस्यां यदि प्रातरर्वाक् पूरयसि तदा पट्टाश्वं ददामि। **कपर्दिना** पूरिता–

**श्रुत्वा ध्वनेर्मधुरतां गगनावतीर्णे भूमौ मृगे विगतलाञ्छन एष चन्द्रः।**
**मा गान्मदीयवदनस्य तुलामितीव गीतं न गायतितरां युवतिर्निशासु ॥ ५२ ॥**

राज्ञा पट्टाश्वो दत्तः। एकदा श्रीगुरुभिः शिक्षा दत्ता–

**सदा सदाचारवने यतेथा, मा क्वापि सप्तव्यसनीं भजेथा।**
**दीनेषु दौस्थ्यं परिखण्डयेथा, कीर्त्या त्रिलोकीमपि मण्डयेथा ॥ ५३ ॥**

§४२. एकदा नृपे सभामुपविष्टे **मालवीयाः** प्रधाना नृपं नत्वा सभायामुपविशुः। इतो नृपेन(ण) **खड्गं** कोशादाकृष्य पुनः क्षेप्तुमारब्धम्। न विशति। इतः प्रधानैर्मिथो मुखावलोकनं कृतम्। ततः पुरोहितेनोक्तम्–

**सौराष्ट्रप्रभृतिक्षितीश्वरशिरःश्रेणीषु कुन्तास्वपि,**
**प्रत्याकारमुखप्रवेशविमुखस्तिष्ठन् कृपाणोऽधुना।**
**धाराध्वंसकृतप्रतिज्ञ भवतश्चौलुक्यचूडामणे !**
**मन्येऽहं नरवर्मवर्मघटितां कोशश्रियं वाञ्छति ॥ ५४ ॥**

तत्कालं सैन्यानि सज्जयित्वा नृपो **मालवकं** प्रत्यचालीत्। वर्षत्रयवि[ग्र]हेण **धारामाददे**। **नरवर्मनृपं** चादाय श्रीपत्त[न]मायातः।

एकदा **नरवर्मेण** राज्ञः किमपि महत् कार्यं कृतम्। नृपस्तुष्ट उक्तवान्–'वरं वृणु'। इतः सभा श्याम-वक्त्रा जाता। असौ **माल[व]कं** याचिष्यते। इतो **नरवर्मभूभुजा** उक्तम्–'देव ! मम देवताऽवसरः प्रसादी-क्रियताम्। अपरं न याचे'। तत्र **वृद्धभोजनृपकरोडिः** स्वर्णरत्नजटिताऽस्ति। तथा सीताया वने यान्त्या नृपद-शरथेन मुद्राऽर्पिता–'बहुडी ! इयं गृह्यताम्'। सा **'बहुडी'** इति ख्याता। सा च तत्रास्ति। हेममयी मण्ड-पिका, चिन्तामणिर्गणपतिः, इन्द्रनीलमयो नीलकण्ठः–एतानि वस्तूनि सन्ति। तत् श्रुत्वा सभा हृष्टा। नृ[प]स्तु श्यामो जातः। प्रधानैः पृष्टम्–'देव ! हर्षस्थाने को विषादः ? यत्र **मालवको** गणितः, तत्र देवताऽवसरेण किम्?' 'यूयं मूर्खाः, येन पूर्वजा उद्धृताः कष्टा [त्त]स्तेन सर्वं कृतम्'। गुप्तेः कृष्ट्वा देवताऽवसरं मालवकं च दत्त्वा प्रस्थि(स्थापि)तः ॥

॥ इति नरवर्मप्रबन्धः ॥

§ ४३. कदाचित् कुमारपालनृपतिः सङ्घाधिपतीभूय तीर्थयात्रां चिकीर्षुर्महता महेन देवालयप्रस्थाने जाते देशान्तरायातयुगलिकया 'त्वां प्र[ति] डाहलदेशीयः कर्णनृपतिरुपैति' इति विज्ञप्तः । स्वेदतिलकितं ललाटं दधानो मन्त्रिवाग्भटेन सार्द्धं ससाध्वसं ध्वस्तसङ्घाधिपत्यमनोरथः प्रभोरुपान्ते स्वं निनिन्द । अथ तस्मिन् नृपतेर्महाभये समुत्पन्ने किञ्चिदवधार्य–'द्वादशे यामे भवतो निर्वृतिर्भविष्यति' इति आदिश्य विसृष्टो नृपः । किंकर्त्तव्यतामूढो यावदास्ते, तावन्निश्रितवेलासमागतयुगलिकया–'श्रीकर्णो दिवं गतः' इति विज्ञप्तः । नृपेण ताम्बूलमुत्सृजता 'कथम् ?' इति पृष्टौ तावूचतुः–'कुम्भिकुम्भस्थलस्थः श्रीकर्णो निशि प्रयाणं कुर्वन् निद्रामुद्रितलोचनः कण्ठपीठप्रणयिना सुवर्णशृङ्खलेन प्रविष्टन्यग्रोधपादेन उल्लम्बितः पञ्चतामञ्चितवान् । तस्य संस्कारानन्तरमेव आवां प्रचलितौ'–इति ताभ्यां विज्ञप्तः । तत्कालपौषधवेश्मनि समागतो नृपः प्रशंसापरः, कथं कथमप्यपवार्य द्वासप्ततिमहासामन्तैः समं सङ्घेन च प्रभुणा द्विधोपदिश्यमानवर्त्मा धंधुक्कनगरे प्रभूणां जन्मभूमौ प्राप्तः । स्वयं कारितसप्तदशहस्तप्रमाणे श्रीझोलिकाविहारे प्रभावनाविधित्सुर्जातिपिशुनानां द्विजानामुदितमुपसर्गं वीक्ष(क्ष्य), तान् निर्विषयताडितान् कुर्वन्, श्रीशत्रुञ्जयतीर्थमाराधयन्, 'दुक्खक्खओ कम्मक्खओ' इति प्रणिधानदण्डकं उच्चरन्, देवस्य पार्श्वे विविधप्रार्थनावसरे–

**इक्कह फुल्लह माटि देइ जि सग्गह तणां सुह ।**
**एवड करइ क्कु साटि बपुरे भोलि म जिणवरह ॥ ५६ ॥**

इति चारणमुच्चरन्तं निशम्य नवकृत्वः पठितेन नवसहस्रान् तस्मै नृपतिर्ददौ । तदनन्तरं उज्जयन्तसन्निधौ गते तस्मिन् अकस्मादेव पर्वतकम्पे संजायमाने श्रीहेमाचार्या नृपं प्राहुः–'इयं छत्रशिला युगपदागतयो[ः] पुण्यवतोरुपरि पतिष्यति' इति वृद्धपरम्परा । तदावां पुण्यवन्तौ, यदि गीः सत्या भवति तदा लोकापवादः । ततो नृ[प]तिरेव देवं नमस्करोतु न वय[मि]त्युक्ते नृपतिनोपरुध्य सङ्घेन सह प्रभवः प्रहिताः । स्वयं छत्रशिलामार्गं परिहृत्य जीर्णदुर्गे नवपद्याकरणाय वाग्भटदेव आदिष्टः । तत्पद्याकृते व्ययीकृतास्त्रिषष्टिलक्षाः ॥

॥ इति तीर्थयात्राप्रबन्धः ॥

§ ४४. एकदा श्रीपत्तने द्वात्रिंशद्विहारकाणां प्रतिष्ठां महदुत्सवेन प्रारब्धां श्रुत्वा वटपत्र(द्र)पुरनिवासी वसाहकान्हाकः स्वयंकारितप्रासादबिम्बमादाय श्रीपत्तने प्रतिष्ठार्थमाययौ । श्री[हे]माचार्याः प्रतिष्ठार्थेऽभ्यर्थिताः । तैर्मानितम् । इतस्तस्मिन् दिने जनसम्मर्दो जातः । रात्रौ घटी मण्डिता । इतो वसाहस्य भोगाद्युपस्करो विस्मृतः । तेन त[माने]तुं गते असमये लग्नघटी वादिता । असौ समागतः । मध्ये प्रवेशं अलब्ध्वा लग्नघटीं श्रुत्वा विषि(ष)ण्णः । प्रतिष्ठापश्चाज्जनो विरलो जातः । कान्हाकोऽप्यन्तः प्रविश्य गुरूणां चरणयोर्लगित्वा बाढं रुरोद–'मदीयं बिम्बं प्रभो ! स्थितम्' । गुरुभिरूर्द्धमवलोकितम् । लग्नं तदा वहमानं विलोक्योक्तम्–'भो ! त्वं पुण्यवान्, लग्नमधुनाऽस्ति । परिच्छदं कुरु बिम्बप्रतिष्ठायाम्' । स न मन्यते । गुरुभिः प्रतिष्ठां विधाय उक्तम्–'यदि न मन्यसे तथा(दा) देवं पृच्छ, एतत् तथ्यं न वा ?' । बिम्बेनोक्तम्–'भो ! तव बिम्बं वर्षशतत्रयायुः । एतानि वर्षत्रयायूंषि भविष्यन्ति' ।

इतः कश्चिद् व्यवहारी स्तम्भतीर्थे वाणिज्याय गतः । तत्र तेन श्रीदेवाचार्या नमस्कृताः । पृष्टम्–'किमद्य कल्ये नृपः पुण्यकर्म तनोति ?' । 'द्वात्रिंशद् विहाराणां प्रतिष्ठा जाता । तस्य उछ(त्स)वस्य किं कर्ण्ये-(वर्ण्य)ते ?' । 'लग्नं वेत्सि ?', 'अमुकमनुमानम्' । 'इदं लग्नं हेमाचार्यैर्निरूपितं न वा ? यदि निरूपितं तदा म[ह]त् [क्षु]ण्णं जातम्' । स पुनः पत्तनमाययौ । हेमाचार्यैः पृष्टम्–'श्रीदेवसूरयो नमस्कृताः ?' । स्वरूप-

मुक्तम्। 'त्वया कारणं किमपि न पृष्टम् ?'। 'मया ज्ञातं यदुन्नतिम[स]हमानाः कथयन्ति'। इतः **श्रीदेवाचार्याः पत्तनमायाताः**। **श्रीहेमाचार्यान्नमस्करणा[र्थं]** आगच्छतो दृष्ट्वा उक्तम्—'तपोधना! नृपगुरूणामर्थे उपवेशनमानयत'। **श्रीहेमाचार्या** विस्मिताः, यावद् वन्दन्ति तावदुक्तम्—'हे नृपगुरवः! इहाऽऽस्यताम्'। हेमा० उक्तम्—'प्रभो! ममोपरि कथमप्रसादः? प्रभुभिरहं दर्शनविरुद्धे पथि संचरन् दृष्टः श्रुतो वा ?'। 'कथयत, प्रतिष्ठालग्नं भवद्भिः निरूपितं न वा ?'। 'निरूपितम्'। 'तत्र क्रूरकर्तरीयोगोऽस्ति। एतल्लग्नं पूर्वकृतानामपि प्रासादानामनर्थहेतुः'। 'भगवन्! किं क्रियते ?' गुरुभिरुक्तम्—''स्तोकदोषं बहुगुणं कार्यं कार्यं विचक्षणैः'' इति विचिन्त्य यदमी प्रासादा मूलतोऽप्यपाकृत्य नूतनास्तदा सर्वेऽपि प्रासादाः स्थिरं स्युः'। 'प्रभो! एतन्न युज्यते'। 'तर्हि भवितव्यतैव बलवती। भवतां कोऽपराधः'।

§४५. इत एकदा श्री**हेमाचार्याणां** [शिष्यः] **यशश्चन्द्रगणि[ः] स्तम्भतीर्थे** गतः। तत्र सुखासनारूढश्चतुष्पथं वक्रमवलोक्य पप्रच्छ—'कथमत्र वक्रम् ?'। 'अस्य जैनप्रासादस्य देवकुलिकाचतुष्कमिहास्ते तेन कारणेन चतुष्पथं वक्रम्'। 'देवकुलिका निपात्य सरलीकृ(क्रि)यताम्'। तासु पात्यमानासु गोष्ठिकैः कलकलः कृतः। तथापि पातिता एव। तैर्गोष्ठिकैः श्री**देवाचार्य**भक्तैर्गुरवो विज्ञापिताः। तैस्तु **हेमाचार्याणा**मुपालम्भो दत्तः। ते तु गणेर्न्यूनमधिकं न मन्यन्ते। उक्तं—'प्रभो! राज्ञा १४४० प्रासादाः कारिताः। चत्वारो न्यूना ज्ञेयाः'। श्री**देवाचार्यै**रुक्तम्—

**तं किं पि कयं महिसासुरेण पुव्विं कयाइ दुच्चिन्नं।**
**तेण भवाणीभवणे अज्ज वि महिमा वहिज्जंति ॥ ५९ ॥**

हेमा० रुक्तम्—'मृतानामुपरि शकटानि यान्तु'। इतः श्री**हेमाचार्याः** पौषधागारे गताः। प्रतिक्रमणान्ते नृपं प्राहुः—'भवद्भिः श्री**देवाचार्या**नां(णां) पौषधागारे गन्तव्यम्। किञ्चित् कुमुखिताः (?कुपिताः) सन्ति। नृपस्तुच्छूरं भणित्वा न गतः। श्री**देवाचार्यैः शाकंभर्या** उपरि विहारः कृतः। तत्र **वीसलदेवनृपतिना** कृ[त]सन्मानाः सन्ति। एकदा श्री**कुमारपालदेवेन** प्रधानान् प्रेष्य श्री**पत्तने** आकारिताः। देवकुलिकाचतुष्कव्यति[क]रे प्रासादचतुष्कं दत्तम्। एकः श्री**सुवर्णगिरि**मण्डनः श्रीपार्श्वनाथस्य, द्वितीयस्तलहट्यां **जावालिपुरीयः**, तृतीयो **नड्डूले** श्रीयुगादिदेवस्य, चतुर्थो **गूंदउजपुरे** श्रीशान्तिनाथस्य।

§४६. एकदा नृपेण पृष्टाः—'एते प्रासादाः कियच्चिरं स्थास्यन्ति ?'। 'देव! त्वज्जीवितावधिः'। 'कोऽनर्थकारी ?'। 'त्वद्भ्रातृपुत्रो **अजयी**'। 'प्रभो! यद्येवं तर्हि हन्यते'। 'राजन्! तिष्ठतु'। एष पर्यालोचः प्रभूणां शिष्येन(ण) **बालचन्द्रेण** श्रुतः। तस्याग्रे उक्तः। स नंष्ट्वा गतः।

§४७. इत एकदा राज्ञि पौषधागारनिविष्टे गणिना पटी एका वितत्य नृपाय दर्शिता। नृपेणोक्तम्—'कथमेषा पटी लाञ्छनाऽऽकुला दृश्यते'। 'देव! मद्भुरो रुधिरेण'। नृपः क्रुद्धः। 'स को येन मम गुरोरङ्गाद् रुधिरं कृष्टम् ?'। 'देव! ईदृशा उच्छृङ्खला द्विजा एव, अपरः कः'। कथकि(मि)ति पृष्टे—**रोहेडक**स्थाने देवं नन्तुं गताः। तत्रैकेन द्विजेन गवाक्ष्य(क्ष)रूढेन कक्करकः क्षिप्तः। शिरसि लग्नः। रुधिरं निःसृतम्। शिष्यैरप्युपेक्षितम्। मया संवृत्य मुक्ता कदाचित् ज्ञास्यते। एषा सा'। नृपः कुपितः सन् गणिं दलपतिं कृत्वा **चन्द्रावती[श] धारावर्ष** सह प्रहित्य अश्वसहस्रैः १२ समं प्राहिणोत्। **धारावर्ष**स्तु टलितः—'द्विजानां सुता[ना]मुपरि किं गम्यते'। गणिना ग्रामे वेष्टिते द्विजा वर्चसं कर्तुं नि[ः]सृताः। गणिनोक्तम्—'यथान्यायं कुरुत, तदा द्विजा न, अधुना द्विजाः'—इत्यभिधाय पटी दर्शिता। 'तदा मया प्रतिज्ञातमासीत्, यद् भवतां रुधिरेण इमां रञ्जयामि। इष्टदेवतां स्मरत'। तैरुक्तम्—'अधुना त्वमेवेष्टदेवता। यद् रोचते तद् विधीयताम्'। इतः कुण्डी समानीता। तत्र द्विजानामङ्गुली-

चीरणं विधाय सा रुधिरेण भृता । तत्र पटी रक्षिता । द्विजा उक्ता–'गेहान् त्यक्त्वा यात' । तेषु बहिःस्थितेषु प्राकारं खण्डशः कृत्वा गेहांश्च इङ्गालान् वाप्य पुनः पत्तने समायातः । इतो नृपतिना उक्तम्–'क्षेमेण समायाताः ?' । 'देव ! धारावर्षस्त्वदाज्ञामतिक्रम्य स्थितः' । नृपेण देशत्यागो दत्तः । वर्षत्रयेण अश्व ५०० दत्त्वा पुनरायातः ॥

५ ॥ इति रोहेडाद्विजानां प्रबन्धः ॥

§४८. एकदा जाल्योधरे जिनरथयात्रायां जायमानायां द्विजैः कन्दलं कृत्वा रथबिम्बं भग्नम् । श्रावकैः द्विजाः कुट्टिताः । यावत् ते पत्तने रावायां यान्ति, तावत् पूर्वमेव श्रावकैः प्रभवो ज्ञापिताः । इतः प्रतिक्रमण-प्रान्ते गुरुभिर्नृपाय संभालितम् । प्रातर्द्विजैरायातैर्नृपेनो(णो)क्तम्–'यूयं म्लेच्छा धर्मस्थानभङ्गात्, अतो नगरं त्यक्त्वा देशत्यागं यात' । तैः प्रभवो विज्ञप्ताः–'परं क्व यामः ?' । ततो गुरुभिरुक्तम्–'नरकं (नगरं ?) त्यक्त्वा १० अन्यसीमायां तिष्ठत । पुरमुद्वसं कृतम् ॥

§४९. अथ गुरवः पूर्णायुषश्चतुरशीतिवर्षायुः प्रतिपाल्य दिन ३ अनशनं आदाय, नृपेऽसमाधिपरे आहुः–'मा विषीद, भवतामपि षण्मासान्ते मृत्युः' । त[त]ः समाधिना रामचन्द्रं स्वपदे संस्थाप्य पञ्चपरमेष्ठिस्मृतिपरास्त्रिदिवं जग्मुः । तदनु महोत्सवपुरस्सरं संस्कारे जाते नृपे[ण] शिखां मत्वा भस्मकणः स्वशिरसि क्षिप्तः । लघुजनेन कणे उत्पाटिते गर्त्ता पतिता । सा हेमखड इति प्रसिद्धा जाता ॥

१५ ॥ इति प्रभूणामवसानप्रबन्धः ॥

*

§५०. श्रीहेमचन्द्रसूरयः श्रीकुमारपालदेवस्य पूर्वभवं कथयामासुः । महाराजश्रीकुमारपालदेवस्य...... स्थानान्तरं इति व्यतिकरान्महाराजं मुत्कलाप्य सीधु(द्ध)पुरे यात्वा नदीसमीपे भव्यरमणप्रदेशे त्रिभुवनस्वामिनी-विद्यामाराधयितुं प्रवृत्ताः । तृतीयदिवसप्रान्तेऽर्द्धरात्रौ देवी प्रकटीबभूव । तयाऽभिप्राये पृष्टे भणितम्–'परमेश्वरि ! श्रीकुमारपालदेवस्य पूर्वभवं कथय' । सा प्राह–'मालवकसन्धौ पर्वतमध्ये जयत(न्त)नामा भिल्लो वसति । २० अन्यदा वाणिज्यकारकजेसलनामा बह्वीं बलीवर्दावलीं गृहीत्वा जयन्तभिलपल्ल्याः समीपे जलाऽऽश्रये स्थितवान् । चरेण दृष्ट्वा जयन्तस्य वृत्तान्तः कथितः । जयन्तेन सार्थो गृहीतः । केऽपि क्वापि नंष्ट्वा सार्थिका जग्मुः । जेसल-वाणिज्यकारकेण मालविकराज्ञो द्वारं बद्धम् । राज्ञाऽऽकार्य सन्मानितः । राज्ञा जगदे–'यत् त्वदीयं जगाम तद् गृहाण मम पार्श्वात् । अहमात्मीयं तस्य पार्श्वाद् ग्रहीष्यामि । त्वया मम च पार्श्वे स्थेयम्' । 'आदेशः प्रमाण'मिति भणित्वा स्थितः । प्रस्तावे राज्ञा स सेनानी कृतः । जेसलवाणिज्यकारकः कटकं गृहीत्वा पल्लीं २५ भङ्क्त्वा सर्वं विनाशयामास । जयन्तः पलायांचक्रे । तेन कोपाज्जयन्तपुत्रो बालको मारितः । तत उज्जयिन्यां गतस्य राजप्रसादो बभूव । जयन्तः पल्लीपतिरेकाकी भ्रान्त्वा गङ्गायास्तटे गतः सन् चौरिकया बालवृद्धान् मारयति । क्रूरचित्तो बभूव । कदाचित् श्रीयशोभद्रसूरयो ग्र(गृ)हे चटिताः । अहं मारयिष्यामीति भणितम् । भणितं पूज्यैः–'त्वया बहवो लोका विनाशिताः । अग्रेऽपि बहुपातकमर्जितम्'–इत्यादि[वचनेन] श्रीयशोभद्रसूरिभिर्बो-धितः । जीववधे नियमं जग्राह । गङ्गातटं परित्यज्य तिलङ्गदेशे अणघउरनगरे ईश्वरव्यवहारिणो गृहे थावरी-३० नाम्नी कर्मकरी, तस्य(स्या) गृहे स्थितः । तया व्यवहारिणा च पुत्रबुद्ध्या गणितः । तत्रस्थो जीवदयां पालयति । अन्यदा श्रीयशोभद्रसूरयोऽनघपुरे समाजग्मुः । मम गुरवः समागताः । मम भाग्यं जागर्त्ति । सदा गुरूणां पार्श्वे उपविष्टस्तिष्ठति । अन्यदा ईश्वरव्यवहारिणा पृष्टः–'अद्यकल्ये क्व यासि, गृहे न दृश्यसे' । तेनोक्तम्–'गुरूणां

पार्श्वे धर्म्मं शृणोमि'। व्यवहारिणा भणितम्—'के ते गुरवः'। तेन वर्णना कृता। महामहेश्वरो व्यवहारी गुरूणां समीपे गतः। जैनधर्मं श्रुत्वा सकुटुम्बो जैनो बभूव। अन्यदा देवकुलं कारितम्। श्रीयशोभद्रसूरिभिः प्रतिष्ठा(ष्ठा) कृता। ईश्वरस्त्रिकालं देवपूजां करोति। चतुर्म्मासकदिने जयन्तः [तेन] साकं देवगृहे नीतः। तेनोक्तम्—'वीतरागं न पूजयसि ?'। जयन्तेनोक्तम्—'मम [पा]र्श्वे किमपि द्रव्यं नास्ति येन पुष्पाणि गृहीत्वा पूजयामि'। व्यवहारिणा भणितम्—'अमूनि पुष्पाणि गृहाणि(ण)'। तेनोक्तम्—'ममैभिः पुष्पैर्देवं पूजयतः किं पुण्यम् ?'। तेन चूतेन पूर्वं जितान् विंशतिकपर्दकान् व्ययित्वा पुष्पाणि गृहीत्वा वीतरागः पूजितः। गुरुसमीपे उपवासश्च कृतः। भोजनवेलायामात्मार्थं भोजनं परिवेष्य मुनीनां दत्तम्। आत्मानं कृतार्थं मेने। प्रस्तावे शुभध्यानेन मृत्वा चौलुक्यवंशे तिहुअणपालगृहे कुमारपालो बभूव। देवपूजाप्रभावेण राज्यं जातम्। पूर्वभवे जीवदयाप्रभावेण अमारिः कृता। एतत् कुमारपालदेवो न मानयति। श्रीहेमसूरिभिर्भणितम्—'लि(ति)लङ्गदेशे अणघउरपत्तने व्यवहारिणो गृहे थावरीनामकर्म्मकरी सा पृष्टव्या'—इति प्रत्ययार्थं राज्ञा आत्मीयसालको मुत्कलितः। तत्र गतेन तेन सर्वं कर्मकर्याः श्रुतम्। तद्दिनादारभ्य श्रीकुमारपालदेवः परमश्रावको बभूव। जेसलवणिजारको बालकहत्याकारी राज्ञा निःका(ष्का)सितः। स्वकीयपापं ज्ञात्वा कार्पटिकीभूय कावड(डं) स्कन्धे कृत्वा केदारं नमस्कृत्य श्रीसोमेश्वरे गङ्गोदककुम्भान् ढालयति। तत्प्रभावात् कर्णराजगृहे श्रीमयणल्लदेव्याः श्रीजयसिंहदेवो बभूव। श्रीकुमारपालदेवेन सह श्रीजयसिंहदेवस्य पाश्चात्यभवाद् वैरं सञ्जातम्। इति कुमारपालदेवस्य श्रीहेमसूरिभिः पाश्चात्यभवो भणितः॥

**आज्ञावर्त्तिषु मण्डलेषु विपुलेष्वष्टादशस्वादराद्**
**अब्दान्येव चतुर्दश प्रसृमरां मारिं निवार्यौजसा।**
**कीर्त्तिस्तम्भनिभान् चतुर्दशशतीसङ्ख्यान् विहारानसौ**
**कृत्वा निर्मितवान् कुमारनृपतिर्जैनो निजैनो व्ययम्॥ ५७॥**

एकदा श्रीकुमारपालेनोक्तम्—

**धनमहरहर्दत्तं स्वीयं यथार्थितमर्थिने**
**कृतमरिकुलं नारीशेषं खखड्गविजृम्भितैः।**
**प्रणयिनि जने रागोद्रेके रतिर्विहिता चिरं**
**किमपरमतः कर्त्तव्यं नस्तनावपि नादरः॥ ५८॥**

§५१. एकदा नृपस्याऽऽयुःक्षये जाते नृपेनना(णान)शनं जगृहे। इतोऽजयपालेन एत्य परिग्रहं परावृत्य भाण्डागारे स्वमुद्रा दत्ता। नृपेण तृषितेन जलमानायितम्। मृत्पात्रेणानीतम्। नृपेणोक्तम्—'शिप्रा क्व ?'। 'भाण्डागारे……कथं न उद्घटति'। 'देव ! अजयपालेन मुद्रा दत्ता'। नृपेणोक्तम्—'मयि सत्यप्यजयपालाज्ञा ?' निःश्वासं मुक्त्वा कराद् मृत्पात्रं त्यक्तम्। इतश्चारणेनोक्तम्—

**कुमरड कुमरविहार, इत्ता कांइं कराविया।**
**तांह कुण करिस्यइ सार, सीप न आवइं सइं धणी॥ ५९॥**

इति निःश्वाससमं शिप्रा भग्ना। नृपस्त्रिदिवं ययौ। आयुर्वर्ष ८१। वर्ष ५० [तमे]राज्यं जातम्, तदनु वर्ष ३० [यावद् राज्यं कृतम्]॥

## ॥ इति कुमारपालप्रबन्धः समाप्तः ॥

*

## —अथ अजयपालप्रबन्धः—

*

§५२. तदनु **अजयपालदेवो** राज्ये निविष्टः। तेन प्रभोः शिष्यस्य बालचन्द्रस्य प्रीत्या रामचन्द्रमाहूयोक्तः— ताम्रमयः पट्टो ध्मातः समानीतः राज्ञा। भवता उपविश्यते। स्वर्णपट्टानमोक्षयत् (?)। मया त्वयं मुक्तः। इह सत्वरमास्यताम्। **रामचन्द्रस्तु**—

5 **महिवीढह सचराचरह जिणि सिरि दिन्हा पाय।**
**तसु अत्थमणु दिणेसरह होइ त होउ चिराय॥ ६०॥**

इति भणन् पट्टे निविष्टः। ज्वाला मुखे निर्ययौ। रामस्त्रिदिवं गतः। बालचन्द्र[ः] पट्टे निविष्टः।

इतो नृपो द्विजवाक्याद् नृपकीर्त्तनान् पातयितुमारेभे। कृष्णवेषो महिषारूढो मुद्गरकरः, मुद्गरकरैर्द्विजैर्वृतः। यमकरणमिति नाम धारयन् कुमारपालप्रासादान् पातयति। तपोधनाः पत्तनं विहाय दिशोदिशं जग्मुः।

*

10 §५३. अथैकदा **श्रीहेमाचार्येषु** सत्सु राज्ञा उक्तम्—'प्रभो! एकस्मिन् शासने पक्षद्वयी का? । एके चतुर्दशीं मन्यन्ते, एके पूर्णिमां मन्यन्ते। तत एकमेव भवति तदा रम्यम्।' श्रीहे**मसूरिणा पूर्णिमापक्षीयाः सुमतसूरय** आहूय उक्ताः—'यद् नृपः कथयति, एकस्मिन् धर्मे भेदः कः। ततः पूर्णिमायां प्रतिक्रमणं समस्तमपि सङ्घं वयमादरयिष्यामः। यतिप्रतिष्ठां यूयं मन्यध्वम्'। तैरुक्तम्—'पर्यालोच्य प्रातर्निवेदयिष्यामः'। गुरुभिरादृतो मार्गो मोक्तुं न युज्यते, स्थातुं च न शक्यते—

15 **रूसउ कुमरनरिंदो अहवा रूसंतु लिंगिणो सव्वे।**
**पुन्निमसङ्घपइट्ठा सुमतसूरिहिं नो मुक्का॥ ६१॥**

इति गाथां स्थूलाक्षरैर्लिखित्वा स्थापनाचार्यं आलके मुक्त्वा प्रणष्टाः। प्रातराकारणे गते जनाः पत्रिकामादाय प्रभूणां दर्शयामासुः। प्रभुभिरुक्तम्—'नष्टाः कियद् यास्यन्ति। अधुनैव आनाय्यन्ते, परं सन्तु'। ते भयभीताः **कुङ्कुणे** गताः। तत्र विदेशे कोऽपि नोपलक्षयति, नाऽऽयाति। अत्यन्तं दुःखिताः सन्ति। एकदा 20 तनुगमनिकायां गतैराकुलीतरं दृष्ट्वा **गूर्जरात्रां** संस्मृत्य तामनु फेरकान् ददतां हृदयसङ्घट्टः समजनि।

§५४. इतोऽजयपालराज्ये पूर्णिमापक्षीयः **सामन्तसिंह**नामा मन्त्री। तेन नृपो विज्ञप्तः—'देव! पूर्वराज्ञि सति भवान्भावठिं (?) भ्रान्तैः श्रीहेमाचार्यैरसद्गुरवो निष्कासिताः। देवस्य राज्ये ते युज्यन्ते। यद्यादेशो भवति तदाऽऽनाय्यन्ते'। नृपाज्ञयाऽऽहूताः। जनो वक्ति 'अमी के ?'। 'भावठिकाः', 'वराकाः सन्तु'। इतः **सामन्तसिंहो** मृतः। एकदाऽऽचार्यो लम्बिकान् परिधाय तलिकैः प्रहतैस्तनुगमनिकायां याति। इतः कुमारगुरुं 25 **प्रह्लादं** प्रासादगवाक्षस्थं वीक्ष्य प्राह—'**कपोतो यां शाखायामधिवसति सा शुष्यतितराम्**'।

इतः **प्रह्लादे**नोक्तम्—'आचार्य! शृणु, एतत् सत्यमेव—

**गते हेमाचार्ये कुमतितिमिरध्वंसनरवौ,**
**स्वपक्षक्षेमार्थं क[पट]पटुभिः कैश्चिदधरैः।**
**श्रितः सामन्ताख्यः सपदि स हि पञ्चत्वमगमत्,**
30 **कपोतो यां शाखामधिवसति सा शुष्यतितराम्॥ ६२॥**

इत आचार्यः कृष्णमुखः स्वोपश्रयं ययौ । चिन्तितम्—देवताऽऽराधनं विना मनोरथानां सिद्धिर्न । अतो रैवतके गत्वा देवीं अम्बां परितोष्य हेमाचार्यसमो भविष्यामि । तत्र गतस्तपश्चरणं प्रारेभे । उपवासत्रयं तदनु तलहट्टिकायां पारणम् । एकः परिचर्याकरः । एवं मास २ तपःप्रान्ते देव्यम्बा प्रत्यक्षा जाता—'कार्यं वद' । तेनोक्तम्—'यादृशः कुमारपालदेवस्तादृशमजयपालदेवम्, यादृशो हेमाचार्यस्तादृशं मां विधेही'ति कथिते देव्याह—'गूर्जरात्रायां न । अन्यत्र गच्छ' । तेनोक्तम्—'ममाप्यत्रैव पडप(?)मस्ति' । अम्बिकयोक्तम्—'तर्हि याहि' । तेनोक्तम्—'यदि एतत् सत्यं करोमि तदाहं...' अम्बिकया हेमाचार्यनृपमूर्त्योरधिष्ठायिकावुक्तौ—'यदेष भवद्यशः समीहते' । ताभ्यां पवनयोगाद् यमलपर्वतान्तरे क्षिप्तश्चूर्णितश्च । क्षुल्लकेनावलोकमाने रजोहृतिः प्राप्तः । तामादाय समागतः ।

*

§५५. अथ [अजयपालेन] प्रासादेषु पात्यमानेषु यमकरणं तारणदुर्गोपरि संनद्धम् । प्रातः प्रयास्यतीति श्रुत्वा वसाहआभडमुख्यः [संघः] पर्यालोचितवान्—विलोकयत, श्रीकुमारपालदेवेन प्रासादाः कारिताः । अनेन दुरात्मना पातिताः । कोऽपि न वेत्स्यति यन्नृपः श्रावकोऽभून्न वा । यद्येष तारणदुर्गप्रासादो रक्षितुं शक्यते तदा भव्यम् । सीलणकउतिगिआ विनाऽन्योपायो नास्ति । तस्य गृहे चलत । [गतस्तत्र] सङ्घस्तेनाभ्युत्थितः । करौ संयोज्य उक्तम्—'मयि विषये महान् प्रसादः । किं कार्यम् ?' । 'भो ! त्वं वेत्सि, पूर्वनृपेण प्रासादाः कारिताः, अनेन पातिताः । एकस्तारणदुर्गस्यावशेषोऽस्ति सोऽपि प्रातः पतिष्यति । यदि त्वया रक्ष्यते, अन्यः कोऽप्युपायो नास्ति' । 'एष भवतां प्रमादः । पूर्वं ज्ञापितोऽभूवं तदैकोऽपि नापतिष्यत्' । 'यज्जातं तज्जातम् । त्वयाऽमुं रक्षता सर्वेऽपि रक्षिताः' । सङ्घः सत्कृत्य विसृष्टः । स नृपसमीपं गतः—'देव ! मुत्कलापयामि' । 'भो ! क्व यासि ?' । 'देव ! वयमुत्पन्नभक्षकाः । सर्वं भक्षितम् । क्वापि रायतने गत्वा कृ(त्व)न्नाम्ना द्रविणमादाय पुनरेष्यामः' । नृपेणोक्तम्—'यदि पत्तनं विहाय यूयमन्यत्र यात, तदाऽहं लज्जे । अवसरं दास्यामि' । 'देव ! [अद्य] अवसरो भवति वा यामि' । 'तर्हि सज्जतां कृत्वा सन्ध्योपर्येहि' । नृपेण सर्वः कोऽप्याहूतः । प्रारब्धं प्रेक्षणम् । इतः सीलणेन इष्टिकाः समानीय पातिताः । मृत्तिकारासभानि रंगान्तः समाजग्मुः । पानीयं च । कटिकस्त्वाकारितः—'प्रासादं कुरु' । तेन कृतः । मध्ये एकस्य देवस्य स्थापनं कृतम् । ध्वजाऽऽरोपं कृत्वाऽग्रे नृत्यं कृत्वा उक्तम्—'देव ! गजान्ता लक्ष्मीः, ध्वजान्तो धर्मः । अतोऽहममुं निर्माय कृतकृत्यो जातः । शयनं विधास्ये'—इति मुकटीं कृत्वा सुप्तः । पुत्रेणागत्य देवकुलिका पातिता । सीलणः पटीं त्यक्त्वा उत्थितः सन् प्राह—'रे ! केनेदं पातितम् ?' । 'भवतो ज्येष्ठपुत्रेण' । सीलणेन स चपेटया हतः—'रे ! त्वमस्यापि सदृशो न ? । एतस्यापि नृपतेर्हीनः ! । अनेन स्वपितरि मृते तस्य कीर्त्तनानि पातितानि । त्वया मम जीवतोऽपि पातितम् । मम मृत्युरपि न प्रतीक्षितः' । इति श्रुत्वा नृपस्य नेत्रयोर्नीरं पपात । 'सीलण ! किं कथयिष्यसि (कथयसि) ? देव ! विमृशस्व तथ्यमिदमतथ्यं वा । गृहस्थः कीर्त्तनं कारयति । यावन्मम कोऽपि भविष्यति तावदस्य सारा भविष्यति' । 'ये पतितास्ते पतिताः, शेषाः सन्तु' । एक एवावशेषोऽस्ति । यस्तव नाम्ना । यमकरणं व्यावर्त्यताम् । इत्थं कृते प्रासादाश्चत्वार उद्धारिताः ।

॥ इति तारणगढप्रासादरक्षणप्रबन्धः ॥

*

§ ९६. अथ राज्याद् वर्षे तृतीये पर्युषणपर्वणि धारापद्रीये प्रासादे श्रावका मिलिताः। आभडवसाहेन उक्तम्-'समयं विलोकयत। यत्र तपोधनानां सहस्रा आसन् तत्राद्य स कोऽपि न दृश्यते, यस्य मुखात् प्रत्याख्यानमपि क्रियते। क्वापि कोऽपि तपोधनः पुरमध्ये श्रुतो दृष्टो वा?'। एकेन कर्णे प्रविश्य उक्तम्-'यद् राजपुत्रवाटके धरणिगः श्रेष्ठ्यस्ति, तेन जङ्घाबलपरिक्षीणाः स्वगुरवः स्थापिताः सन्ति च्छन्नम्'। तद्वसु ५ वसाहस्तस्य गृहे गतः। तेनाभ्युत्थितः। पादमवधार्यताम्। 'अद्य सांवत्सरिकपर्वणि तपोधनान् दर्शय'। तेनोक्तम्-क्व तपोधनाः?'। 'सन्ति'। तेन भूमिगृहे नीत्वा गुरवो दर्शिताः। वसाहस्तु चरणयोर्निपत्य रोदितुं प्रवृत्तः-'भगवन्! स कोऽपि नास्ति, यो अमुं दुरात्मानं नृपं शिक्षयति'। गुरुभिरुक्तम्-'शक्तिरस्ति, परं सांनिध्यकर्त्ता कोऽपि विलोक्यते'। वसाहस्तु तस्यैव श्रेष्ठिनः शिक्षां दत्त्वा ययौ। गुरवो जपुं प्रवृत्ताः।

§ ९७. इतस्तृतीयदिने नृपस्य कुबुद्धिर्जाता। तदीयौ धांगा-वइजलिआख्यौ पदाती स्तः। तयोर्माता सुहाग-१० देवी सा स्वैरिण्यस्ति। सा नृपेणानीयान्धकारे स्थापिताऽस्ति। इतः सन्ध्यावसरे वइजलिकः पीत्वा समायातः। नृपेण हास्ये प्रारब्धे उक्तम्-'रे! याचस्व स्वैरम्'। तेनोक्तम्-'देव! अधुनाऽवसरयोग्यं दीयताम्'। नृपेणोक्तम्-'उपवरिकायां व्रज। परं वदनं नावलोकनीयम्'। स तत्र गतः। इतः पृष्ठे नृपो दीपकरः समाययौ। तेनाम्बा दृष्टा। सवित्र्या पुत्रो दृष्टः। परस्परं लज्जितौ। वइजलेन धांगाग्रे उक्तम्-'नृपेणैवंविधं हास्यमकारि, तदहं मरिष्ये'। तेन साक्षेपमुक्तम्-'मारयिष्ये न वदसि, मरिष्ये वदसि। अमुं मारयिष्यावः'-इति निश्चित्य स्थितौ। १५ नृपस्तु राजपाट्यां निर्ययौ। सन्ध्यायां सुखासनासीनोऽन्धकारप्रतोल्यां प्रविशन् वइजलेन कपाटपश्चान्निर्गत्य धांगाकेन सह स्थितेन उभाभ्यां नृपो हतः। कलकले जाते धांगाको हतः, वइजलो नष्टः। राजा तु तत्रैव पपात। जनो दिशोदिशं गतः। इतो लब्धसञ्ज्ञस्तृषितो राजा रिङ्खन् प्रतोलीप्रत्यासन्ने तन्तुवायगृहे प्रविष्टः। गर्त्तायां मुखे वाहेने (पातिते) तन्तुवायेन लकुटो क्षिप्तः श्वानं मत्वा। तेन विदीर्णशिराः पपाठ-

धांगा दोसु न वइजल्या नवि सामंतह भेउ।
२० जं मुणिवर संताविआ तह कम्मह फल एहु ॥ ६३ ॥

इति वदन् पीडया मृत्वा श्वभ्रं ययौ ॥*॥

## ॥ इत्यजयपालप्रबन्धः ॥

* * *

शतार्थिकवि-सोमप्रभाचार्यकृत

# कुमारपालप्रतिबोध

## नामकबृहत्प्राकृतग्रन्थस्य ऐतिह्यसारात्मकः संक्षेपः ।

---

### प्रथमः प्रकाशः ।

§§ १. ग्रन्थकारकृता प्रस्तावना ।

चउसु दिसासु पसरियं मोह-बलं निज्जिउं पयट्टो व्व । पयडिय-धम्म-चउक्को चउ-देहो जयइ जिण-नाहो ॥
तं नमह रिसह-नाहं नाण-निहाणस्स जस्स अंसेसु । अलि-कसिणो केस-भरो रेहइ रुक्खे भुयंगो व्व ॥
तं सरह संतिनाहं पवन्न-चरणं पि जं चरण-लग्गा । तियस-कय-कणय-पंकय-मिसेण सेवंति नव निहिणो ॥
कज्जल-समाण-वन्नं सिवंग-भूयं निसिद्ध-मय-मारं । परिहरिय-रायमइयं दुहा नमंसामि नेमिजिणं ॥
मज्झ पसीयउ पासो पासे जस्सोरगिंद-फण-मणिणो । दिप्पंति सत्त-दीव व्व सत्त तत्ताइं पायडिउं ॥ ५
सो जयइ महावीरो सरीर-दुग्गाओ भाव-रिउ-वग्गो । चिरमन्न-पाण-रोहं काउं निव्वासिओ जेण ॥
वित्थारिय-परमत्थं अणग्घ-रयणासयं सुवन्न-पयं । दोगच्च-दलण-निउणं नमह निहाणं व जिण-वयणं ॥
जेसिं तुट्ठिं लट्ठिं व लहिउ मंदो वि अखलिय-पएहिं । विसमे वि कव्व-मग्गे संचरइ जयंतु ते गुरुणो ॥
कइणो जयंतु ते जलहिणो व्व उवजीविऊण जाण पयं । अन्ने वि घणा भुवणे कुणंति धन्नाण उक्करिसं ॥
जलहि-जल-गलिय-रयणं व दुलहं माणुसत्तणं लहिउं । जिणधम्मंमि पयत्तो कायव्वो बुद्धिमंतेण ॥ १०

सग्गो ताण घरंगणं सहयरा सव्वा सुहा संपया, सोहग्गाइ-गुणावली विरयए सव्वंगमालिंगणं ।
संसारो न दुरुत्तरो सिव-सुहं पत्तं करंभोरुहे, जे सम्मं जिणधम्म-कम्म-करणे वट्टंति उद्धारया ॥

सप्पुरिस-चरित्ताणं सरणेण पयंपणेण सवणेण । अणुमोयणेण य फुडं जिणधम्मो लहइ उक्करिसं ॥
पुव्विं जिणा गणहरा चउदस-दस-पुव्विणो चरिम-तणुणो । चारित्त-धरा बहवो जाया अन्ने वि सप्पुरिसा ॥
तह **भरहेसर-सेणिय-संपइ**निवपमिइणो समुप्पन्ना । पवयण-पभावणा-गुण-निहिणो गिहिणो वि सप्पुरिसा ॥ १५
तेसिं नाम-ग्गहणं पि जणइ जंतूण पुन्न-पब्भारं । सग्गापवग्ग-सुह-संपयाउ संपाडइ कमेण ॥
संपइ पुण सप्पुरिसो एक्को सिरि-**हेमचंद**-मुणिणाहो । फुरियं दूसम-समए वि जस्स लोउत्तरं चरियं ॥
दुइओ य दलिय-रिउ-चक्क-विक्कमो **कुमरवाल**-भूपालो । जेण दढं पडिवन्नो जिण-धम्मो दूसमाए वि ॥
केवल-नाण-पलोइअ-तइलोक्काणं जिणाण वयणेहिं । पुव्व-निवा पडिबुद्धा जिणधम्मे जं न तं चुज्जं ॥
चुज्जमिणं जं राया **कुमारवालो** परूढ-मिच्छत्तो । छउमत्थेण वि पहुणा जिणधम्म-परायणो विहिओ ॥ २०
तुलिय-तवणिज्ज-कंती सयवत्त-सवत्त-नयण-रमणिज्जा । पल्लविय-लोय-लोयण-हरिस-प्पसरा सरीर-सिरी ॥
आबालत्तणओ वि हु चारित्तं जणिय-जण-चमक्कारं । बावीस-परीसह-सहण-दुद्धरं तिव्व-तव-पवरं ॥
मुणिय-समत्थ-सत्था निम्मिय-वायरण-पमुह-गंथ-गणा । परवाइ-पराजय-जाय[सु]कित्ति-मई जय-पसिद्धा ॥
धम्म-पडिवत्ति-जणणं अतुच्छ-मिच्छत्त-मुच्छिआणं पि । महु-खीर-पमुह-महुरत्त-निम्मियं धम्म-वागरणं ॥
इच्चाइ-गुणेहिं **हेमसूरिणो** पेच्छिऊण छेय-जणो । सद्दहइ अदिट्ठे वि हु तित्थंकर-गणहर-प्पमुहे ॥ २५
जिणधम्मे पडिवत्तिं **कुमरनरिंदस्स** लोइउं लोओ । पत्तियइ व्व चिरंतण-भूमिवईणं पि अविअप्पं ॥
सिव-पह-कहगे वि सयं **वीरजिणे सेणिएण** नरवइणा । जीव-दयं कारविउं न सक्किओ कालसोयरिओ ॥

दूसम-समए वि हु **हेमसूरिणो** निसुणिऊण वयणाइं । सव्व-जणो जीव-दयं कराविओ **कुमरवालेण** ॥
तत्तो दुवे वि एए इमंमि समए असंभव-चरित्ता । कय-कयजुयावयारा जिणधम्म-पभावण-पहाणा ॥
दुण्ह वि इमाण चरियं भणिज्जमाणं मए निसामेह । वित्थरइ जेण सुकयं थिरत्तणं होइ जिणधम्मे ॥ १०
जइ वि चरियं इमाणं मणोहरं अत्थि बहुयमन्नं पि । तह वि जिणधम्म-पडिबोह-बंधुरं किं पि जंपेमि ॥
बहु-भक्ख-जुयाइ वि रसवईए मज्झाओ किंचि भुंजंतो । निय-इच्छा-अणुरूवं पुरिसो किं होइ वयणिज्जो ॥

§§ २. **अणहिलपाटकपुरवर्णनम्** ।

अत्थि मही-महिलाए मुहं महंतं मयंक-पडिबिम्बं । **जंबुद्दीव**-छलेणं नहलच्छि दट्ठुमुन्नमियं ॥
तुंगो नासा-वंसो व्व सोहए तियस-पव्वओ जत्थ । सीया-सीओयाओ दीहा दिट्ठीओ व सहंति ॥
तत्थारोविय-गुण-धणु-निभं नलाडं व **भारहं** अत्थि । जत्थ विरायइ विउलो वेयड्ढो रयय-पट्टो व्व ॥ १५
जं **गंग-सिंधु**-सरिया-मुत्तिय-सरियाहिसंगयं सहइ । तीर-त्तण-पंति-कुंतल-कलाव-रेहंत-पेरंतं ॥
तत्थत्थि तिलय-तुल्लं **अणहिलवाडय-पुरं** घण-सुवन्नं । पेरंत-मुत्तियावलि-समो सहइ जत्थ सिय-सालो ॥
गरुओ **गुज्जरदेसो** नगरागर-गाम-गोउलाइन्नो । सुर-लोय-रिद्धि-मय-विजय-पंडिओ मंडिओ जेण ॥
जम्मि निरंतर-सुर-भवण-पडिम-ण्हवणंबु-पूर-सित्त व्व । सहला मणोरह-दुमा धम्मिय-लोयस्स जायंति ॥
जत्थ सहंति सुवन्ना कंचण-कलसा य सुर-घर-सिरेसु । गयण-ब्भम-खिन्न-निसण्ण-खयर-तरुणीण पीण-थणा ॥ ४०
अब्भंलिह-सुर-मंदिर-सिर-विलसिर-कणय-केयण-भुएहिं । नच्चइ व जत्थ लच्छी सुट्ठाण-निवेस-हरिस-वसा ॥
जत्थ मणि-भवण-भित्तीसु पेच्छिउं अत्तणो वि पडिबिंबं । पडिजुवइ-संकिरीओ कुप्पंति पिएसु मुद्धाओ ॥
जम्मि महा-पुरिसाणं धण-दाणं निरुवमं निएऊण । अजहत्थ-नामओ लज्जिओ व्व दूरं गओ धणओ ॥
जस्सिं समच्छरमणा जलासया न उण धम्मिय-समूहा । कमलोवकारया सूर-रस्सिणो न उण सप्पुरिसा ॥
जत्थ रमणीण रूवं रमणिज्जं पेच्छिऊण अमरीओ । लज्जंतीओ व चिंताइ कह वि निद्दं न पावंति ॥ ४५

§§ ३. **चौलुक्यवंशीयराजावलीवर्णनम्** ।

तत्थासि **मूलराओ** राया **चोलुक्क**-कुल-नह-मयंको । जणिया जणाणुकूला मूलेण व जेण नीइ-लया ॥
जस-पुंडरीय-मंडल-मंडिय-बंभंड-मंडवो तत्तो । खंडिय-विपक्ख-मुंडो चंडो **चामुंडराय**-निवो ॥
तत्तो **वल्लहराओ** राया रइवल्लहो व्व रमणिज्जो । जेण तुरएहिं **जगझंपणु** त्ति कित्ती जए पत्ता ॥
तत्तो **दुल्लहराओ** राया समरंगणंमि जस्स करे । करवालो छज्जइ जय-सिरीइ मयणाहि-तिलओ व्व ॥
तत्तो **भीमनरिंदो** भीमो व्व पयंड-बाहु-बल-भीमो । अरि-चक्कं अक्कमिउं पायडिओ जेण पंडु-जसो ॥ ५०
तो **कण्णदेव**-निवई जस्सासिजलंमि विलसिया सुइरं । जस-रायहंस-सहिया जय-लच्छी रायहंसी व्व ॥
तयणु **जयसिंहदेवो** पयंड-भुय-दंड-मंडवे जस्स । कित्ति-पयाव-मिसेणं चिर-कालं कीलियं मिहुणं ॥
तम्मि गए सुर-लोयं काउं व सुरेसरेण सह मित्तिं । कमल-वणं व दिणिंदे अत्थमिए मउलियं भुवणं ॥
तत्तो पहाण-पुरिसा निय-मइ-माहप्प-विजिय-सुर-गुरुणो । रज्जमणाहं दट्ठुं जंपंति परुप्परं एवं ॥

§§ ४. **कुमारपालवंशवर्णनम्** ।

आसि सिरि-**भीमदेवस्स** नंदणो जणिय-जण-मणाणंदो । कय-सयल-खोणि-खेमो नामेणं **खेमराओ** त्ति ॥ ५५
तस्स तणओ तिणीकय-कंदप्पो देह-सुंदरत्तेण । **देवप्पसाय**-नामो देव-पसायण-पहाण-मणो ॥
तस्संगरुहो गरुओ पर-रमणि-परंमुहो महासूरो । तियस-सरि-सरिस-कित्ती **तिहुयणपालो** त्ति नामेण ॥
तस्स सुओ तेयस्सी पसन्न-वयणो सुरिंद-सम-रूवो । देव-गुरु-पूयण-परो परोवयारुज्जओ धीरो ॥
दक्खो दक्खिन्न-निही नयवंतो सव्व-सत्त-संजुत्तो । सूरो चाई पडिवन्न-वच्छलो **कुमरवालो** त्ति ॥

एसो जुग्गो रज्जस्स रज्जलक्खण-सणाह-सव्वंगो । ता झत्ति ठविज्जउ निग्गुणेहिं पज्जत्तमन्नेहिं ॥ १०
एवं परुप्परं मंतिऊण तह गिण्हिऊण संवायं । सामुद्दिय-मोहुत्तिय-साउणिय-नेमित्तिय-नराणं ॥
रज्जंमि परिट्ठविओ **कुमारवालो** पहाण-पुरिसेहिं । तत्तो भुवणमसेसं परिओस-परं व संजायं ॥
तुट्ट-हार-दंतुरिय-घरंगण नच्चिय-चारु-विलास-पणंगण ।
निब्भर-सद्द-भरिय-भुवणंतर वज्जिय-मंगल-तूर-निरंतर ॥
साहिय-दिसा-चउक्को चउ-व्विहोवाय-धरिय-चउ-वन्नो । चउ-वग्ग-सेवण-परो **कुमर-नरिंदो** कुणइ रज्जं ॥

### §§८. कुमारपालस्य धर्मस्वरूपजिज्ञासा ।

अह अन्नया वियड्ढे बहुगुणे बहु-धम्म-सत्थ-नाणड्ढे । विप्पपहाणे हक्कारिऊण रन्ना भणियमेवं ॥ १५
करि-तुरय-रह-समिद्धं नरिंद-सिरि-कुसुम-लीढ-पयवीढं । लंघिय-वसण-सहस्सो संपत्तो जं अहं रज्जं ॥
तं पुव्व-भवे धम्मो सुहेक्क-हेऊ कओ मए को वि । कज्जस्स दंसणाओ जाणंति हि कारणं निउणा ॥
ता धम्मस्स सरूवं कहेहि परिभाविऊण सत्थत्थं । जेण तमायरिऊणं करेमि मणुयत्तणं सहलं ॥
मणुयत्तणे वि लद्धे कुणंति धम्मं न जे विमूढ-मणा । ते रोहणं पि पत्ता महग्घ-रयणं न गिण्हंति ॥
तो वुड्ढ-बंभणेहिं निवस्स वेयाइ-सत्थ-पन्नत्तो । पसु-वह-पहाण-जागाइ-लक्खणो अक्खिओ धम्मो ॥ २०
तं सोऊण निवेणं फुरिय-विवेएण चिंतियं चित्ते । अहह दिय-पुंगवेहिं न सोहणो साहिओ धम्मो ॥
पंचिंदिय-जीव-वहो निक्करुण-मणेहिं कीरए जत्थ । जइ सो वि होज्ज धम्मो नत्थि अहम्मो तओ को वि ॥
ता धम्मस्स सरूवं जहट्ठियं किं इमे न जाणंति ? । किं वा जाणंता वि हु मं विप्पा विप्पयारंति ॥
इय चिंताए निद्दं अलहंतो निसि-भरम्मि नरनाहो । नमिऊण अमच्चेणं **बाहडदेवेण** विन्नत्तो ॥

### §§ ९. वाग्टदेवेन कुमारपालस्य हेमचन्द्रसूरिपरिचयोत्पादनम् । तत्र प्रथमं हेमचन्द्रगुरुपरम्परावर्णनम् ।

धम्माधम्म-सरूवं नरिंद ! जइ जाणिउं तुमं महसि । खणमेक्कमेगचित्तो निसुणसु जं किं पि जंपेमि ॥ २५
आसि भमरहिओ पुन्नतल्ल-गुरु-गच्छ-दुम-कुसुम-गुच्छो । समय-मयरंद-सारो **सिरिदत्तगुरू** सुरहि-सालो ॥
सो विहिणा विहरंतो गामागर-नगर-भूसियं वसुहं । **वागड**-विसय-वयंसे **रयणपुरे** पुर-वरे पत्तो ॥
तत्थ निवो **जसभद्दो** भद्द-गयंदो व्व दाण-लद्ध-जसो । वेरि-करि-दलण-सूरो उन्नय-वंसो विसाल-करो ॥
तम्मि नरिंद-मंदिर-अदूर-देसम्मि गिण्हिउं वसहिं । चंदो व्व तारय-जुओ मुणि-परियरिओ ठिओ एसो ॥
तस्स सुहा-रस-सारणि-सहोयरं धम्म-देसणं सोउं । संवेग-वासिय मणा के वि पवज्जंति पव्वज्जं ॥ ३०
अन्ने गिहत्थ-धम्मोचियाइं बारस-वयाइं गिण्हंति । मोक्ख-तरु-बीय-भूयं सम्मत्तं आयरंति परे ॥
अह अन्नया निसाए सज्झाय-झुणिं मुणीण सोऊण । **जसभद्द**-निवो संवेग-परिगओ चिंतए चित्ते ॥
धन्ना एए मुणिणो काउं जे सव्व-संग-परिहारं । पर-लोय-मग्गमेक्कं मुक्क-भवासा पयंपंति ॥
ता एयाण मुणीणं पय-पउम-नमंसणेण अप्पाणं । परिगलिय-पाव-पंकं पहाय-समए करिस्सामि ॥
एवं धम्म-मणोरह-कलिय-मणो पत्थिवो लहइ निद्दं । मंगल-तूर-रवेणं पडिबुद्धो पच्छिमे जामे ॥ ३५
कय-सयल-गोस-किच्चो समत्त-सामंत-मंति-परियरिओ । करि-तुरय-रह-समेओ पत्तो **सिरिदत्त-गुरु**-पासे ॥
भूमि-निहिउत्तमंगो भत्ति-समग्गो गुरुं पणमिऊण । पुरओ निवो निविट्ठो कयंजली भणिउमाढत्तो ॥
भयवं ! धन्ना तुब्भे संसारासारयं मणे धरिउं । जे चत्त-सव्व-संगा पर-लोयाराहणं कुणह ॥
अम्हारिसा अहन्ना परलोय-परंमुहा महारंभा । अनियत्त-विसय-तण्हा जे इह-भव-मेत्त-पडिबद्धा ॥
अह जंपिउं पवत्तो **सिरिदत्तगुरू** नहंगणं सयलं । तव-सिरि-मुत्ता-पंतीहिं दंत-कंतीहिं धवलंतो ॥ ४०
मुह-ससि-पवेस-सुविणोवमाइ-दुलहं नरत्तणं लहिउं । खणमेक्कं पि पमाओ बुहेण धम्मे न कायव्वो ॥

[ अत्र ग्रन्थकारेण मूलदेवकथानकं वर्णितम् । ]

इय धम्म-देसणामय-रसेण सेत्तम्मि भूमिणाहस्स । हियम्मि समुल्लसिओ जिणिंद-धम्माणुराय-दुमो ॥
भणियं निवेण भयवं ! कहियमिणं उभय-भव-हियं तुमए । अन्नो पिओ वि सव्वो जंपइ इह-भव-हियं चेव ॥
ता समयम्मि विमुत्तुं तणं व रज्जं विवेय-गिरि-वज्जं । पडिवज्जिऊण धम्मं सहलं काहं मणुय-जम्मं ॥
ता वंदिउं मुणिंदं निय-मंदिरमागओ महीनाहो । धम्मोवएस-विसरं सुमरंतो गमइ दियहाइं ॥ ९५
अह पावसो पयट्टो संपाडिय-पहिय-हियय-संघट्टो । समरट्ट-मारनट्टो कयंब-संदट्ठ-अलिवट्टो ॥
जत्थ विरहग्गि-डज्झंत-विरहिणी-हियय-लद्ध-पसरेण । धूम-भरेण घण-मंडलेण मलिणी-कयं गगणं ॥
नव-मेह-पिययमेणं समप्पियं जत्थ तडि-लयालेयं । कणयमयाभरणं पिव पयडंति दिसा-पुरंधीओ ॥
नव-पाउस-नरवइ-रज्ज-घोसणा-डिंडिमो व्व सव्वत्थ । जग्गविय-विसम-बाणो वियंभिओ मेह-गज्जिरवो ॥
निवडंति माणिणी-माण-खंडणे विलसमाण-सत्तीओ । जस्सिं जल-धाराओ अणंग-सर-धोरणीओ व्व ॥ १००
तस्सिं चरि-खित्तेसुं नरवइणा वावियाइं धन्नाइं । तेसिं दंसण-हेउं कयावि राया विणिक्खंतो ॥
तम्मि समए करिसगेहिं धन्न-मज्झाओ पुव्वमुक्खणिउं । पुंजीकएसु निप्फल-तणेसु पज्जालिओ जलणो ॥
तत्थ जलणेण डज्झंत-विग्गहं गब्भ-निब्भरं भुयगिं । दट्ठुं संविग्गेणं रन्ना परिभावियं एयं ॥
अहह इमो घरवासो परिहरणिज्जो विवेयवंताणं । बहु-जीव-विणास-करा आरंभा जत्थ कीरंति ॥
एवं संविग्ग-मणो राया निय-मंदिरम्मि संपत्तो । हक्कारिऊण पुच्छइ एगंते सावयं एगं ॥ १०५
संपइ **सिरिदत्तगुरू** गुणवंतो कत्थ विहरइ पएसे । सो कहइ **डिंडुयाणय**-पुरम्मि मुणिपुंगवो अत्थि ॥
तो राया रयणीए कस्स वि अनिवेइऊण निक्खंतो । तुरयंमि समारुहिऊण **डिंडुयाणय**-पुरे पत्तो ॥
**सिरिदत्तगुरुं** नमिऊण तस्स कहिऊण नियय-वुत्तंतं । जंपइ संपइ काउं अणुग्गहं देहि मह दिक्खं ॥
गुरुणा वुत्तं जुत्तं उत्तम-सत्तस्स तुज्झ नर-नाह ! । रज्जं तणं व मुत्तुं करेसि जं संजम-ग्गहणं ॥
नहि संजमाउ अन्नो संसारुच्छेय-कारणं अत्थि । नव-जलहरं विणा किं निव्वडइ दवानलं को वि ॥ ११०
रन्ना अणप्पमुल्लं एक्कं एक्कावलिं समप्पेउं । जिणधम्म-निम्मल-मणा पयंपिआ सावया एवं ॥
कारवह जिणाययणं इमीए एक्कावलीइ मुल्लेण । तेहि वि तह त्ति पडिवज्जिऊण तं झत्ति कारवियं ॥
तं अत्थि तत्थ अज्ज वि चउवीस-जिणालयं जिणाययणं । पुन्नं व मुत्तिमंतं **जसभद्द**-निवस्स जं सहइ ॥
रन्ना पुण पडिवन्ना **सिरिदत्त**-गुरुस्स चलण-मूलम्मि । अंतर-रिउ-बह-दक्खा दिक्खा निसियासि-धार व्व ॥
एगंतरोववासे जा जीवं अंबिलं च पारणए । काहं ति तेण विहिया वय-गहण-दिणे च्चिय पइन्ना ॥ ११५
सुय-सागर-पारगओ सूरि-पयं पाविऊण जसभद्दो । भुवणे चिरं विहरिओ पडिबोहंतो भविय-वग्गं ॥
स-समय-परसमय-विऊ समए तेणावि निय-पए ठविओ । निज्जिय-पज्जुन्न-भडो **पज्जुन्नो** नाम वर-सूरी ॥
अह **जसभद्दो** सूरी तिव्व-तवचरण-सोसिय-सरीरो । निय-परिवार-समेओ आरूढो **उज्जयंतगिरिं** ॥
**रेवयगिरिंद**-मउडं व सुकय-लच्छी-विलास-कमलं व । भव-जलहि-जाणवत्तं व जिणहरं गणहरो पत्तो ॥
नमिऊण नेमिनाहं पमज्जिउं निवसिऊण तस्स पुरो । पज्जुन्नसूरि-पमुहं निय-परिवारं भणइ एवं ॥ १२०
राग-दोस-विमुक्को चिर-सेविय-नाण-दंसण-चरित्तो । निच्छय-नएण तित्थं अप्प च्चिय वुच्चए जइ वि ॥
तह वि हु ववहार-नयेण जो पएसो पणट्ठ-पावाण । तित्थंकराण पएहिं फरिसिओ सो परं तित्थं ॥
इह दिक्खा-पडिवत्ती नाणुप्पत्ती विमुत्ति-संपत्ती । नेमिस्स जेण जाया तेणेसो तित्थमुत्तिमो ॥
अन्नत्थ वि मेल्लिस्सं निस्संदेहं दुहावहं देहं । तत्तो वरं पसत्थे तित्थे इत्थे वि मेल्लेमि ॥
इय भणियं पच्चक्खइ जिण-पच्चक्खं चउव्विहाहारं । वारंतस्स वि पज्जुन्नसूरिणो सपरिवारस्स ॥ १२५
पउमासणोवविट्ठो परिचत्त-समत्त-गत्त-परिकम्मो । सिरि-नेमिनाह-पडिमा-मुहपंकय-निहिय-नयण-जुओ ॥

